# शङ्खसंहिता।

और

# लिखितसंहिता।

मूल संस्कृत और भाषानुवाद।

---

कलकत्ता,

१८।२ भवानीचरण दत्त ष्ट्रीटमें "बङ्गवासी" इलेक्ट्रो

मेशीन प्रेसमें

श्रीनटवर चक्रवर्त्ती द्वारा मुद्रित

और प्रकाशित।

---

संवत् १९६७।

---

मूल्य आठ आने।

# शङ्खसंहिता।

और

# लिखितसंहिता।

मूल संस्कृत और भाषानुवाद।

---

कलकत्ता

३८।२ भवानीचरण दत्त ष्ट्रीटमें "बङ्गवासी" इलेक्ट्रो

मेशीन प्रेसमें

श्रीनटवर चक्रवर्त्ती द्वारा मुद्रित

और प्रकाशित

---

संवत् [illegible]।

---

मूल्य आठ आने।

# शङ्खसंहिता ।

## प्रथमोऽध्यायः ।

स्वयम्भुवे नमस्कृत्य सृष्टिसंहारकारिणे ।
चातुर्वर्ण्यहितार्थाय शङ्खः शास्त्रमथाकरोत् ॥ १
यजनं याजनं दानं तथैवाध्यापनक्रियाम् ।
प्रतिग्रहञ्चाध्ययनं विप्रः कर्म्माणि कारयेत् ॥ २
दानमध्ययनञ्चैव यजनञ्च यथाविधि ।
क्षत्रियस्य तु वैश्यस्य कर्म्मेदं परिकीर्त्तितम् ॥ ३
क्षत्रियस्य विशेषेण प्रजानां परिपालनम् ।
कृषिगोरक्षवाणिज्यं वैश्यस्य परिकीर्त्तितम् ॥ ४
शूद्रस्य द्विजशुश्रूषा सर्व्वशिल्पानि चाप्यथ ।
क्षमा सत्यं दमः शौचं सर्व्वेषामविशेषतः ॥ ५
ब्राह्मणाः क्षत्रिया वैश्यास्त्रयो वर्णा द्विजातयः ।
तेषां जन्म द्वितीयन्तु विज्ञेयं मौञ्जिबन्धनम् ॥ ६
आचार्य्यस्तु पिता प्रोक्तः सावित्री जननी तथा ।
ब्रह्मक्षत्रविशाञ्चैव मौञ्जिबन्धनजन्मनि ॥ ७
विप्राः शूद्रसमास्तावद्विज्ञेयास्तु विचक्षणैः ।
यावद्वेदे न जायन्ते द्विजा ज्ञेयास्तु तत्परम् ॥ ८

इति शङ्खीये धर्म्मशास्त्रे प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः ।

गर्भस्य स्फुटताज्ञाने निषेकः परिकीर्त्तितः ।
ततस्तु स्पन्दनात् कार्य्यं सवनन्तु विचक्षणैः ॥ १
अशौचे तु व्यतिक्रान्ते नामकर्म्म विधीयते ।
नामधेयञ्च कर्त्तव्यं वर्णानाञ्च समाक्षरम् ॥ २
माङ्गल्यं ब्राह्मणस्योक्तं क्षत्रियस्य बलान्वितम् ।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् ॥ ३
शर्म्मान्तं ब्राह्मणस्योक्तं वर्म्मान्तं क्षत्रियस्य च ।
धनान्तञ्चैव वैश्यस्य दासान्तं चान्त्यजन्मनः ॥ ४
चतुर्थे मासि कर्त्तव्यमादित्यस्य प्रदर्शनम् ।
षष्ठेऽन्नप्राशनं मासि चूडा कार्य्या यथाकुलम् ॥ ५
गर्भाष्टमेऽब्दे कर्त्तव्यं ब्राह्मणस्योपनायनम् ।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥ ६
षोडशाब्दस्तु विप्रस्य द्वाविंशः क्षत्रियस्य तु ।
विंशतिः सचतुष्का च वैश्यस्य परिकीर्त्तिता ॥ ७
नाभिभाषेत सावित्रीमत ऊर्द्ध्वं निवर्त्तयेत् ॥ ८
विज्ञातव्यास्त्रयोऽप्येते यथाकालमसंस्कृताः
सावित्रीपतिता व्रात्याः सर्व्वधर्म्मबहिष्कृताः ॥ ९
मौञ्जीबन्धो द्विजानान्तु क्रमान्मौञ्जी प्रकीर्त्तिता ।
मार्गवैयाघ्रवास्तानि चर्म्माणि ब्रह्मचारिणाम् ॥ १०
पर्णपिप्पलबिल्वानां क्रमाद्दण्डाः प्रकीर्त्तिताः ।
कर्णकेशललाटैस्तु तुल्याः प्रोक्ताः क्रमेण तु ॥ ११
अवक्राः सत्वचः सर्व्वे नाग्निदग्धास्तथैव च ।
यज्ञोपवीतं कार्पासक्षौमोर्णानां यथाक्रमम् ॥ १२
आदिमध्यावसानेषु भवच्छब्दोपलक्षितम् ।
भैक्षस्य चरणं प्रोक्तं वर्णानामनुपूर्व्वशः ॥ १३

इति शङ्खीये धर्म्मशास्त्रे द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ।

उपनीय गुरुः शिष्यं वेदमस्मै प्रयच्छति ।
भृतकाध्यापको यश्च उपाध्यायः स उच्यते ॥ १
प्रयतः कल्यमुत्थाय स्नातो हुतहुताशनः ।
कुर्व्वीत प्रयतो भूत्वा गुरूणामभिवादनम् ॥ २
अनुज्ञातश्च गुरुणा ततोऽध्ययनमाचरेत् ।
कृत्वा ब्रह्माञ्जलिं पश्यन् गुरोर्वदनमानतः ॥ ३
ब्रह्मावसाने प्रारम्भे प्रणवञ्च प्रकीर्त्तयेत् ।
अनध्यायेष्वध्ययनं वर्ज्जयेच्च प्रयत्नतः ॥ ४
चतुर्द्दशीं पञ्चदशीमष्टमीं राहुसूतकम् ।

उल्कापातं महीकम्पमशौचं ग्रामविप्लवम् ॥ ५
इन्द्रप्रयाणं सुरतं घनशब्दानिस्वनम् ।
वाद्यकोलाहलं युद्धमनध्यायं विवर्ज्जयेत् ॥ ६
नाधीयीताभियुक्तोऽपि प्रयत्नान्न च वेगतः ।
देवायतनवल्मीकश्मशानशवसन्निधौ ॥ ७
भैक्ष्यचर्य्यां तथा कुर्य्याद् ब्राह्मणेषु यथाविधि ।
गुरुणा चाभ्यनुज्ञातः प्राश्नीयात् प्राङ्मुखः शुचिः ॥ ८
हितं प्रियं गुरोः कुर्य्यादहङ्कारविवर्ज्जितः ॥ ९
उपास्य पश्चिमां सन्ध्यां पूजयित्वा हुताशनम् ।
अभिवाद्य गुरुं पश्चाद् गुरोर्वचनकृद्भवेत् ॥ १०
गुरोः पूर्व्वं समुत्तिष्ठेच्छयीत चरमं तथा ॥ ११
मधु मांसाञ्जनं श्राद्धं गीतं नृत्यञ्च वर्ज्जयेत् ।
हिंसापवादवादांश्च स्त्रीलीलाञ्च विशेषतः ॥ १२
मेखलामजिनं दण्डं धारयेच्च प्रयत्नतः ।
अधःशायी भवेन्नित्यं ब्रह्मचारी समाहितः ॥ १३
एवं कृत्यन्तु कुर्व्वीत वेदस्वीकरणं बुधः ।
गुरवे च धनं दत्त्वा स्नायाच्च तदनन्तरम् ॥

इति शङ्खीये धर्म्मशास्त्रे तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः ।

विन्देत विधिवद्भार्य्यामसमानार्षगोत्रजाम् ।
मातृतः पञ्चमीञ्चापि पितृतस्त्वथ सप्तमीम् ॥ १
ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः ।
गान्धर्व्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः ॥ २
एते धर्म्म्यास्तु चत्वारः पूर्व्वं विप्रे प्रकीर्त्तिताः ।
गान्धर्व्वो राक्षसश्चैव क्षत्रियस्य प्रशस्यते ॥ ३
अप्रार्थितः प्रयत्नेन ब्राह्मस्तु परिकीर्त्तितः ।
यज्ञे तु ऋत्विजे दैवमादायार्षस्तु गोद्वयम् ॥ ४
प्रार्थिताय प्रदानेन प्राजापत्यः प्रकीर्त्तितः ।
आसुरो द्रविणादानाद्गान्धर्व्वः समयान्मिथः ॥ ५
राक्षसो युद्धहरणात् पैशाचः कन्यकाच्छलात् ।
तिस्रस्तु भार्य्या विप्रस्य द्वे भार्य्ये क्षत्रियस्य तु ॥ ६
एकैव भार्य्या वैश्यस्य तथा शूद्रस्य कीर्त्तिता ।
ब्राह्मणी क्षत्रिया वैश्या ब्राह्मणस्य प्रकीर्त्तिता ॥ ७
क्षत्रिया चैव वैश्या च क्षत्रियस्य विधीयते ।
वैश्यैव भार्य्या वैश्यस्य शूद्रा शूद्रस्य कीर्त्तिता ॥ ८
आपद्यपि न कर्त्तव्या शूद्रा भार्य्या द्विजन्मना ।
यस्यां तस्य प्रसूतस्य निष्कृतिर्न विधीयते ॥ ९
तपस्वी यज्ञशीलश्च सर्व्वधर्म्मभृतां वरः ।
ध्रुवं शूद्रत्वमाप्नोति शूद्रश्राद्धे त्रयोदशे ॥ १०
बीयन्ते तु सपिण्डत्वं येषां श्राद्धं कुलोद्भवम् ।
सर्व्वे शूद्रत्वमायान्ति यदि स्वर्गजितास्तु ते ॥ ११
सपिण्डीकरणं कार्य्यं कुलजस्य तथा ध्रुवम् ।
श्राद्धं द्वादशकं कृत्वा श्राद्धे प्राप्ते त्रयोदशे ॥ १२
सपिण्डीकरणं नार्हं न च शूद्रस्तथार्हति ।
तस्मात् सर्व्वप्रयत्नेन शूद्रभार्य्यां विवर्ज्जयेत् ॥ १३
पाणिर्ग्राह्यः सवर्णासु गृह्णीयात् क्षत्रिया शरम् ।
वैश्या प्रतोदमादद्याद्वेदने तु द्विजन्मनः ॥ १४
सा भार्य्या या वहेदग्निं सा भार्य्या या पतिव्रता ।
सा भार्य्या या पतिप्राणा सा भार्य्या या प्रजावती ॥ १५
लालनीया सदा भार्य्या ताड़नीया तथैव च ।
लालिता ताड़िता चैव स्त्री श्रीर्भवति नान्यथा ॥ १६

इति शङ्खीये धर्म्मशास्त्रे चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ।

पञ्च सूना गृहस्थस्य चुल्ली पेषण्युपस्करः ।
कण्डनी चोदकुम्भश्च तस्य पापस्य शान्तये ॥ १
पञ्चयज्ञविधानञ्च गृही नित्यं न हापयेत् ।
पञ्चयज्ञविधानेन तत्पापं तस्य नश्यति ॥ २
देवयज्ञो भूतयज्ञः पितृयज्ञस्तथैव च ।
ब्रह्मयज्ञो नृयज्ञश्च पञ्च यज्ञाः प्रकीर्त्तिताः ॥ ३
होमो दैवो बलिर्भौतः पित्र्यः पिण्डक्रिया स्मृता ।
स्वाध्यायो ब्रह्मयज्ञश्च नृयज्ञोऽतिथिपूजनम् ॥ ४
वानप्रस्थो ब्रह्मचारी यतिश्चैव तथा द्विजः ।
गृहस्थस्य प्रसादेन जीवन्त्येते यथाविधि ॥ ५
गृहस्थ एव यजते गृहस्थस्तप्यते तपः ।
दाता चैव गृहस्थः स्यात् तस्माच्छ्रेष्ठो गृहाश्रमी ॥ ६
यथा भर्त्ता प्रभुः स्त्रीणां वर्णानां ब्राह्मणो यथा ।

अतिथिस्तद्दैवास्य गृहस्थस्य प्रभुः स्मृतः॥ ७
न व्रतैर्नोपवासेन धर्म्मेण विविधेन च।
नारी स्वर्गमवाप्नोति प्राप्नोति पतिपूजनात्॥ ८
न स्नानेन न होमेन नैवाग्निपरिचर्य्यया।
ब्रह्मचारी दिवं याति स याति गुरुपूजनात्॥ ९
नाग्निशुश्रूषया क्षान्त्या स्नानेन विविधेन च।
वानप्रस्थो दिवं याति यथा भोजनवर्ज्जनात्॥ १०
न भैक्षेण च मौनेन शून्यागाराश्रयेण च।
योगी सिद्धिमवाप्नोति यथा मैथुनवर्ज्जनात्॥ ११
न यज्ञैर्दक्षिणाभिश्च वह्निशुश्रूषया न च।
गृही स्वर्गमवाप्नोति यथा चातिथिपूजनात्॥ १२
तस्मात् सर्व्वप्रयत्नेन गृहस्थोऽतिथिमागतम्।
आहारशयनाद्येन विधिवत् परिपूजयेत्॥ १३
सायं प्रातश्च जुहुयादग्निहोत्रं यथाविधि।
दर्शञ्च पौर्णमासञ्च जुहुयाच्च तथाविधि॥ १४
यज्ञैर्वा पशुबन्धैश्च चातुर्म्मास्यैस्तथैव च।
त्रैवार्षिकाधिकान्नं न पिबेत् सोममनन्वितः॥ १५
इष्टिं वैश्वानरीं कुर्य्यात्तथा चाल्पधनो द्विजः।
न भिक्षेत धनं शूद्रात् सर्व्वं दद्यादभीप्सितम्॥ १६
वृत्तिस्तु न त्यजेद्विद्वान् व्रजं पूर्व्वमेव तु।
कर्म्मणा जन्मना शुद्धं विद्यात् पात्रं वलीततम्॥ १७
एतैरेव गुणैर्युक्तं धर्म्मार्जितधनं तथा।
याजयेत्तु सदा विप्रो ग्राह्यस्तस्मात् प्रतिग्रहः॥ १८

इति शाङ्खीये धर्म्मशास्त्रे पञ्चमोऽध्यायः॥ ५

---

### षष्ठोऽध्यायः।

गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः।
अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत्॥ १
पुत्रेषु दारान् निक्षिप्य तया वानुगतो वने।
अग्नीनुपचरेन्नित्यं वन्यमाहारमाहरेत्॥ २
यदाहारो भवेत् तेन पूजयेत् पितृदेवताः।
तेनैव पूजयेन्नित्यमतिथिं समुपागतम्॥ ३
ग्रामादाहृत्य चाश्नीयादष्टौ ग्रासान् समाहितः।
स्वाध्यायञ्च सदा कुर्य्याज्जटाश्च बिभृयात्तथा॥ ४
तपसा शोषयेन्नित्यं स्वकञ्चैव कलेवरम्।
आर्द्रवासास्तु हेमन्ते ग्रीष्मे पञ्चतपास्तथा॥ ५
प्रावृष्याकाशशायी स्यान्नक्ताशी च सदा भवेत्।
चतुर्थकालिको वा स्यात् स्याच्च षष्ठक एव च॥ ६
कृच्छ्रैर्वापि नयेत् कालं ब्रह्मचर्य्यञ्च पालयेत्।
एवं नीत्वा वने कालं द्विजो ब्रह्माश्रमी भवेत्॥ ७

इति शाङ्खीये धर्म्मशास्त्रे षष्ठोऽध्यायः॥ ६॥

---

### सप्तमोऽध्यायः।

कृत्वेष्टिं विधिवत् पश्चात् सर्व्ववेदसदक्षिणाम्।
आत्मन्यग्नीन् समारोप्य द्विजो ब्रह्माश्रमी भवेत्॥ १
विधूमे न्यस्तमुषले व्यङ्गारे भुक्तवर्ज्जने।
अतीते पात्रसम्पाते नित्यं भिक्षां यतिश्चरेत्॥ २
न व्यथेत तथालाभे यथालब्धं न वर्जयेत्।
न याचयेत्तथैवान्नं नाश्नीयात् कस्यचिद् गृहे॥ ३
मृन्मयालाबुपात्राणि यतीनान्तु विनिर्द्दिशेत्।
तेषां सम्मार्ज्जनाच्छुद्धिरद्भिश्चैव प्रकीर्त्तिता॥ ४
कौपीनाच्छादनं वासो बिभृयादसकृच्चरन्।
शून्यागारनिकेतः स्याद्यत्रसायंगृहो मुनिः॥ ५
दृष्टिपूतं न्यसेत् पादं वस्त्रपूतं जलं पिबेत्।
सत्यपूतं वदेद्वाक्यं मनःपूतं समाचरेत्॥ ६
चन्दनैर्लिप्यतेऽङ्गं वा भस्मचूर्णैर्विगर्हितैः।
कल्याणमप्यकल्याणं तयोरेव न संश्रयेत्॥ ७
सर्व्वभूतहितो मैत्रः समलोष्टाश्मकाञ्चनः।
ध्यानयोगरतो नित्यं भिक्षुर्यायात् परां गतिम्॥ ८
जन्मना यस्तु निर्व्विण्णो मरणेन तथैव च।
आधिभिर्व्याधिभिश्चैव तं देवा ब्राह्मणं विदुः॥ ९
अशुचित्वं शरीरस्य प्रियस्य च विपर्य्ययः।
गर्भवासे च वसतिस्तस्मान्मुच्येत नान्यथा॥ १०
जगदेतन्निराक्रन्दं न तु सारमनर्थकम्।
भोक्तव्यमिति निर्व्विण्णो मुच्यते नात्र संशयः॥ ११
प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्बिषान्।
प्रत्याहारैश्च संसर्गान् ध्यानेनानीश्वरान् गुणान्॥ १२
सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह।

भिः षडेवायतप्राणः प्राणायामः स उच्यते ॥ १३
मनसः संयमस्तज्ज्ञैर्धारणेति निगद्यते ।
संहारश्चेन्द्रियाणाञ्च प्रत्याहारः प्रकीर्त्तितः ॥ १४
हृदयस्थस्य योगेन देवदेवस्य दर्शनम् ।
ध्यानं प्रोक्तं प्रवक्ष्यामि सर्व्वस्माद्योगतः शुभम् ॥
हृदिस्था देवताः सर्व्वा हृदि प्राणाः प्रतिष्ठिताः ।
हृदि ज्योतींषि भूयश्च हृदि सर्व्वं प्रतिष्ठितम् ॥ १६
स्वदेहमरणिं कृत्वा प्रणवञ्चोत्तरारणिम् ।
ध्याननिर्म्मथनाभ्यासाद्विष्णुं पश्येद्धृदि स्थितम् ॥ १७
हृद्यर्कश्चन्द्रमाः सूर्य्यः सोमो मध्ये हुताशनः ।
तेजोमध्ये स्थितं तत्त्वं तत्त्वमध्ये स्थितोऽच्युतः ॥ १८

अणोरणीयान् महतो महीया-
नात्मास्य जन्तोर्निहितो गुहायाम् ।
तेजोमयं पश्यति वीतशोको
धातुः प्रसादान्महिमानमात्मनः ॥ १९

वासुदेवस्तमोऽन्धानां प्रत्यक्षो नैव जायते ।
अज्ञानपटसंवीतैरिन्द्रियैर्विषयेप्सुभिः ॥ २०
एष वै पुरुषो विष्णुर्व्यक्ताव्यक्तः सनातनः ।
एष धाता विधाता च पुराणो निष्कलः शिवः ॥ २१

वेदाहमेतं पुरुषं महान्त-
मादित्यवर्णं तमसः परस्तात् ।
सर्व्वं विदित्वा न बिभेति मृत्यो-
र्नान्यः पन्था विद्यतेऽयनाय ॥ २२

पृथिव्यापस्तथा तेजो वायुराकाशमेव च ।
पञ्चेमानि विजानीयान्महाभूतानि पण्डितः ॥ २३
चक्षुःश्रोत्रे स्पर्शनञ्च रसना घ्राणमेव च ।
बुद्धीन्द्रियाणि जानीयात् पञ्चेमानि शरीरके ॥ २४
शब्दो रूपं तथा स्पर्शो रसो गन्धस्तथैव च ।
इन्द्रियस्थान् विजानीयात् पञ्चैव विषयान् बुधः ॥ २५
हस्तौ पादावुपस्थश्च जिह्वा पायुस्तथैव च ।
कर्म्मेन्द्रियाणि पञ्चैव नित्यं सन्ति शरीरके ॥ २६
मनो बुद्धिस्तथैवात्मा व्यक्ताव्यक्तं तथैव च ।
इन्द्रियेभ्यः पराणीह चत्वारि प्रवराणि च ॥ २७
तथात्मानं तदन्यत्र तं पुरुषं पञ्चविंशकम् ।
तच्च ज्ञात्वा विमुच्यन्ते ये जनाः साधुवृत्तयः ॥ २८
इदन्तु परमं गुह्यमेतदक्षरमुत्तमम् ।
अशब्दमरसस्पर्शमरूपं गन्धवर्ज्जितम् ।
निर्दुःखमसुखं शुद्धं तद्विष्णोः परमं पदम् ॥ २९
विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥ ३०
बालाग्रशतशो भागः कल्पितस्तु सहस्रधा ।
तस्यापि शतशो भागाज्जीवः सूक्ष्म उदाहृतः ॥ ३१
महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥ ३२
स पुरुषः सर्व्वेषु भूतेषु तिष्ठत्यविरतः सदा ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ ३३

इति हारीते धर्म्मशास्त्रे सप्तमोऽध्यायः ॥ ७

---

## अष्टमोऽध्यायः ।

क्रियास्नानं प्रवक्ष्यामि यथावद्विधिपूर्व्वकम् ।
मृद्भिरद्भिश्च कर्त्तव्यं शौचमादौ यथाविधि ॥ १
जले निमज्ज्य उन्मज्ज्य उपस्पृश्य यथाविधि ।
तीर्थमावाहनं कुर्य्यात् तत् प्रवक्ष्याम्यशेषतः ॥ २
प्रपद्ये वरुणं देवमम्भसां पतिमर्च्चितम् ।
याचितं देहि मे तीर्थं सर्व्वपापापनुत्तये ॥ ३
तीर्थमावाहयिष्यामि सर्व्वाघविनिषूदनम् ।
सान्निध्यमस्मिंस्तोये च क्रियतां मदनुग्रहात् ॥ ४
रुद्रान् प्रपद्ये वरदान् सर्व्वानप्सुसदस्तथा ।
सर्व्वानप्सुसदश्चैव प्रपद्ये प्रयतः स्थितः ॥ ५
देवमप्सुषदं वह्निं प्रपद्येऽघनिषूदनम् ।
आपः पुण्याः पवित्राश्च प्रपद्ये शरणं तथा ॥ ६
रुद्राश्चाग्निश्च सर्पाश्च वरुणस्त्वाप एव च ।
शमयन्त्वाशु मे पापं माञ्च रक्षन्तु सर्व्वशः ॥ ७
हिरण्यवर्णेति तिसृभिर्जगतीभिश्चतसृभिः ।
शन्नोदेवीति च तथा शन्न आपस्तथैव च ॥ ८
इदमापः प्रवहतेत्यृचन्तु समुदीरयेत् ।
एवं सम्मार्ज्जनं कृत्वा छन्द आर्षञ्च देवताः ॥ ९
अघमर्षणसूक्तस्य प्रपठेत् प्रयतः सदा ॥ १०
छन्दोऽनुष्टुप् च तस्यैव ऋषिश्चैवाघमर्षणः ।

देवता भावयुक्तश्च प.पनुत्ये प्रकीर्त्तितः ॥ ११
ततोऽम्भसि निमग्नः स्यात्त्रिः पठेदघमर्षणम् ।
प्रपद्यामूर्द्धनि तथा महाव्याहृतिभिर्जलम् ॥ १२
यथाश्वमेधः क्रतुराट् सर्व्वपापप्रणोदनः ।
तथाघमर्षणं सूक्तं सर्व्वपापप्रणाशनम् ॥ १३
अनेन विधिना स्नात्वा स्नातवान् धौतवाससा ।
परिवर्त्त्य नवासांस्तु तीर्थकामानि सङ्क्रमेत् ॥ १४
उदकस्याप्रदानात्तु स्नानशाटीं न पीडयेत् ।
अनेन विधिना स्नातस्तीर्थस्य फलमश्नुते ॥ १५

इति शङ्खीये धर्म्मशास्त्रे ऽष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः ।

अतः परं प्रवक्ष्यामि शुभामाचमनक्रियाम् ।
कायं कनिष्ठिकामूले तीर्थमुक्तं करस्य तु ॥ १
अङ्गुष्ठमूले च तथा प्राजापत्यं प्रकीर्त्तितम् ।
अङ्गुल्यग्रे स्मृतं दैवं पित्र्यं तर्ज्जनिमूलकम् ॥ २
प्राजापत्येन तीर्थेन त्रिः प्राश्नीयाज्जलं द्विजः ।
द्विः प्रमृज्य मुखं पश्चादद्भिः खं समुपस्पृशेत ॥ ३
हृद्गाभिः पूयते विप्रः कण्ठगाभिश्च भूमिपः ॥ ४
अन्तर्जानुः शुचौ देशे प्राङ्मुखः सुसमाहितः ।
उदङ्मुखोऽपि प्रयतो दिशश्चानवलोकयन् ॥ ५
अद्भिः समुद्धृताभिस्तु हीनाभिः फेनबुद्बुदैः ।
वह्निना चाप्यदग्धाभिरङ्गुलीभिरुपस्पृशेत् ॥ ६
तर्ज्जन्यङ्गुष्ठयोगेन स्पृशेन्नासाद्वयं ततः ।
अङ्गुष्ठानामिकाभ्यान्तु श्रवणौ समुपस्पृशेत् ॥ ७
कनिष्ठाङ्गुष्ठयोगेन स्पृशेत् स्कन्धद्वयं ततः ।
सर्व्वासामेव योगेन नाभिञ्च हृदयं ततः ॥ ८
संस्पृशेत् तु तथा मूर्द्धा यथा चाचमने विधौः ॥ ९
त्रिः प्राश्नीयाद् यदम्भस्तु प्रीत स्तेनास्य देवताः ।
ब्रह्मा विष्णुश्च रुद्रश्च भवन्तीत्यनुशुश्रुमः ॥ १०
गङ्गा च यमुना चैव प्रीयेते परिमार्ज्जनात् ।
नासत्यदस्रौ प्रीयेते स्पृष्टे नासापुटद्वये ॥ ११
स्पृष्टे लोचनयुग्मे च प्रीयेते शशिभास्करौ ।
कर्णयुग्मे तथा स्पृष्टे प्रीयेते अनिलानलौ ॥ १२
स्कन्धयोः स्पर्शनादस्य प्रीयन्ते सर्व्वदेवताः ।
मूर्द्धस्तु स्पर्शनादस्य प्रीतस्तु पुरुषो भवेत् ॥ १३
विना यज्ञोपवीतेन तथा मुक्तशिखोऽपि वा ।
अप्रक्षालितपादस्तु आचान्तोऽप्यशुचिर्भवेत् ॥ १४
बहिर्ज्जानुरुपस्पृश्य एकहस्तार्पितैर्जलैः ।
सशब्दाभिस्तथाद्भिश्च नैव शुद्धिमवाप्नुयात् ॥ १५
आचम्य च पुरा प्रोक्तं तीर्थसम्मार्ज्जनं ततः ।
उपस्पृश्य ततः पश्चान्मन्त्रेणानेन धर्म्मतः ॥ १६
अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः ।
त्वं यज्ञस्त्वं वषट्कार आपोज्योतीरसोऽमृतम् ॥ १७
आचम्य च ततः पश्चादादित्याभिमुखो जलम् ।
उदुत्यं जातवेदसं मन्त्रेण प्रक्षिपेत् ततः ॥ १८
एष एव विधिः प्रोक्तः सन्ध्यायाश्च द्विजातिषु ।
पूर्व्वां सन्ध्यां जपंस्तिष्ठेदासीनः पश्चिमां तथा ॥ १९
ततो जपेत् पवित्राणि पवित्रान् वाथ शक्तितः ।
ऋषयो दीर्घसन्ध्यत्वाद्दीर्घमायुरवाप्नुयुः ॥ २०

इति शङ्खीये धर्म्मशास्त्रे नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः ।

सर्व्ववेदपवित्राणि वक्ष्याम्यहमतः परम् ।
येषां जपैश्च होमैश्च पूयन्ते मानवाः सदा ॥ १
अघमर्षणं देवव्रतं शुद्धवत्यस्तु यत् सदा ।
कूष्माण्ड्यः पावमान्यश्च सर्व्वाविरज एव च ॥ २
अभीष्टपदा चैव स्तोमानि व्याहृतिस्तथा ।
भारुण्डानि च सामानि गायत्र्यं वै रुतं तथा ॥ ३
पुरुषव्रतञ्च भारञ्च तथा सोमव्रतानि च ।
अब्लिङ्गं बार्हस्पत्यञ्च वाक्सूक्तमनृतं तथा ॥ ४
शतरुद्रमथर्व्वशिरस्त्रिसुपर्णं महाव्रतम् ।
गोसूक्तमश्वसूक्तञ्च इन्द्रसूक्तञ्च सामनी ॥ ५
त्रीण्याज्यदोहानि
रथन्तरञ्चाग्निव्रतं वामदेव्यञ्च ।
एतानि गीतानि पुनन्ति जन्तून्
जातिस्मरत्वं लभते यदीच्छेत् ॥ ६

इति शङ्खीये धर्म्मशास्त्रे दशमोऽध्यायः ॥ १० ॥

## एकादशोऽध्यायः ।

इति वेदपवित्राण्यभिहितानि
एभ्यः सावित्री विशिष्यते ।
नास्त्यघमर्षणात् परमं
तज्जपेन व्याहृतिभिः परं होमः ॥ १

न सावित्र्याः परं जप्यम् । कुशहस्त्यासनासीनः कुशोत्तरीयः कुशपाणिः प्राङ्मुखः सूर्य्याभिमुखो वाक्षमालामादाय देवताध्यायी तज्जपं कुर्य्यात् । सुवर्ण मणि मुक्ता-स्फाटिक-पद्म-पत्र वीजानामन्यतमेनाक्षमालां कुर्य्यात् । ध्यायन् वामहस्तोपरि वा गणयेत् । आदौ दैवतमार्षं छन्दश्च स्मरेत् । ततः सप्रणवव्याहृतिकामाद्यवन्ते च शिरसा गायत्रीमावर्त्तयेत् । तथास्याः सविता देवता ऋषिर्विश्वामित्रो गायत्री छन्दः । प्रणवाद्या भूर्भुवःस्वर्महर्जनस्तपःसत्यमिति व्याहृतयः ।
आपोज्योतीरसोऽमृतं ब्रह्मभूर्भुवः स्वरोम् ॥ २
सव्याहृतिकां सप्रणवां गायत्रीं शिरसा सह ।
ये जपन्ति सदा तेषां न भयं विद्यते क्वचित् ॥ ३
दशकृत्वा तु सा देवी दिनपापप्रणाशिनी ।
शतं जप्ता तथा सा तु सर्व्वकल्मषनाशिनी ।
सहस्रं जप्ता सा तु नृणां पातकेभ्यः समुद्धरेत् ॥ ४
सुवर्णस्तेयी कृतघ्नश्च ब्रह्महा गुरुतल्पगः ।
सुरापश्च विशुध्येत लक्षजप्तेन सर्व्वदा ॥ ५
प्राणायामत्रयं कृत्वा स्नानकाले समाहितः ।
अहोरात्रकृतात् पापात् तत्क्षणादेव शुध्यति ॥ ६
सव्याहृतिकाः सप्रणवाः प्राणायामास्तु षोड़श ।
अपि भ्रूणहनं मासात् पुनन्त्यहरहः कृताः ॥ ७
हुता देवी विशेषेण सर्व्वकामप्रदायिनी ।
सर्व्वपापक्षयकरी वरदा भक्तवत्सला ॥ ८
शान्तिकामस्तु जुहुयात् सावित्रीमक्षतैः शुचिः ।
हन्तुकामोऽपमृत्युञ्च घृतेन जुहुयात् तथा ॥ ९
श्रीकामस्तु तथा पद्मैर्विल्वैः काञ्चनकामतः ।
ब्रह्मवर्च्चसकामस्तु जुहुयात् पूर्ववत् तथा ॥ १०
घृतयुक्तैस्तिलैर्वह्नौ हुत्वा तु सुसमाहितः ।
गायत्र्ययुतहोमात् तु सर्व्वपापैः प्रमुच्यते ॥ ११
पापात्मा लक्षहोमेन पातकेभ्यः प्रमुच्यते ।
ब्रह्मलोकमवाप्नोति प्राप्नुयात् काममीप्सितम् ॥ १२
गायत्री चैव जननी गायत्री पापनाशिनी ।
गायत्र्यास्तु परं नास्ति दिवि चेह च पावनम् ॥ १३
हस्तत्राणप्रदा देवी पततां नरकार्णवे ।
तस्मात्तामभ्यसेन्नित्यं ब्राह्मणो नियतः शुचिः ॥ १४
गायत्रीजप्यनिरतो हव्यकव्येषु भोजयेत् ।
तस्मिन् न तिष्ठते पापमब्बिन्दुरिव भास्करे ॥ १५
जप्येनैव तु संसिध्येद् ब्राह्मणो नात्र संशयः ।
कुर्य्यादन्यन्न वा कुर्य्यान्मैत्रो ब्राह्मण उच्यते ॥ १६
उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः ।
नोच्चैर्जप्यं बुधः कुर्य्यात् सावित्र्यास्तु विशेषतः ॥ १७
सावित्रीजप्यनिरतः स्वर्गमाप्नोति मानवः ।
गायत्रीजप्यनिरतो मोक्षोपायञ्च विन्दति ॥ १८
तस्मात् सर्व्वप्रयत्नेन स्नातः प्रयतमानसः ।
गायत्रीञ्च जपेद्भक्त्या सर्व्वपापप्रणाशिनीम् ॥ १९

इति शाङ्खे धर्म्मशास्त्रे एकादशोऽध्यायः ॥ ११

---

## द्वादशोऽध्यायः ।

स्नातः कृतजपस्तदनु प्राङ्मुखो दैवेन तीर्थेन देवानुदकेन तर्पयेत् । प्रत्यक्षं पुरुषस्य तत्तोदकाञ्जलीन् दद्यात् पुष्पाञ्जलीन् भक्त्या । अथ कृतापसव्यो दक्षिणामुखोऽन्तर्ज्जानुः पित्र्येण पितॄणां आब्रह्मकाद्यमुदकं दद्यात् । पित्रे पितामहाय पितामह्यै क्रमात् पुरुषात् पितृपक्षे यावतां नाम जानीयात् । पितृपक्षीयाणां तथाणां दत्त्वा मातृपक्षीयाणां गुरूणां सम्बन्धिबान्धवानाञ्च कृत्वा सुहृदां कुर्य्यात् । भवन्ति चात्र श्लोकाः ।
विना रौप्यसुवर्णेन विना ताम्रतिलेन च ।
विना दर्भैश्च मन्त्रैश्च पितॄणां नोपतिष्ठते ॥ १
सौवर्णराजताभ्याञ्च खड्गेनौडुम्बरेण वा ।
दत्तमक्षयतां याति पितॄणान्तु तिलोदकम् ॥ २
कुर्य्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।
पयोमूलफलैर्वापि पितॄणां प्रीतिमावहन् ॥ ३

स्नातस्तु तर्पयं कृत्वा पितृयाग्नु निवायमा।
पितृयज्ञमवाप्नोति प्रीयन्ति पितरस्तथा ॥ ४

इति शङ्खीये धर्म्मशास्त्रे द्वादशोऽध्यायः ॥ १२ ॥

---

## अथ त्रयोदशोऽध्यायः।

ब्राह्मणान्न परीक्षेत दैवे कर्म्मणि धर्म्मवित्।
पित्र्ये कर्म्मणि सम्प्राप्ते यत्नात्मभिः परीक्षयम् ॥ १
ब्राह्मणा ये विकर्म्मस्था वैड़ालव्रतिकाः शठाः।
हीनाङ्गा अतिरिक्ताङ्गा ब्राह्मणाः पङ्क्तिदूषकाः ॥ २
गुरूणां प्रतिकूलाश्च तथानुप्राप्तिनश्च ये।
गुरूणां त्यागिनश्च ब्राह्मणाः पङ्क्तिदूषकाः ॥ ३
अनध्यायेष्वधीयानाः शौचाचारविवर्ज्जिताः।
शूद्रान्नरसपुष्टा ब्राह्मणाः पङ्क्तिदूषकाः ॥ ४
षडङ्गवेदवक्तारो बहृचश्चैव सामगाः।
त्रिणाचिकेतः पञ्चाग्निर्ब्राह्मणाः पङ्क्तिपावनाः ॥ ५
ब्रह्मदेयानुसन्ताना ब्रह्मदेयाप्रदायकाः।
ब्रह्मदेयापतिश्च ब्राह्मणाः पङ्क्तिपावनाः ॥ ६
ऋग्यजुः पारगो यश्च साम्नां यश्चापि पारगः।
अथर्व्वाङ्गिरसोऽध्येता ब्राह्मणाः पङ्क्तिपावनाः ॥ ७
नित्यं योगरतो विद्वान् समलोष्टाश्मकाञ्चनः।
ध्यानशीलो यतिर्विद्वान् ब्राह्मणाः पङ्क्तिपावनाः ॥ ८
द्वौ दैवे प्राङ्मुखौ भोज्य पित्र्ये चोदङ्मुखांस्तथा।
भोजयेदविधान् विप्रानेकैकमुभयत्र वा ॥ ९
भोजयेदथवाप्येकं ब्राह्मणं पङ्क्तिपावनम्।
दैवे कृत्वा तु नैवेद्यं पश्चाद्वह्नौ तु तत् क्षिपेत् ॥ १०
उच्छिष्टसन्निधौ कार्य्यं पिण्डनिर्व्वपणं बुधैः।
अभावे च तथा कार्य्यमग्निकार्य्यं यथाविधि ॥ ११
श्राद्धं कृत्वा तु यत्नेन त्वरा क्रोधविवर्ज्जितः।
उष्णमन्नं द्विजातिभ्यः श्रद्धया विनिवेदयेत् ॥ १२
भोजयेदितरान् विप्रान् गन्धमाल्यानुलेपनैः
पङ्क्तिविदाननं गेहे भोज्यं वा भक्ष्यमेव वा।
अनिवेद्य न भोक्तव्यं पिण्डमूले कथञ्चन ॥ १३
उग्रगन्धान्यगन्धानि चैत्यवृक्षभवानि च।
पुष्पाणि वर्ज्जनीयानि तथा पल्लवानि च ॥ १४
तोयोद्भवानि देयानि रक्तान्यपि विशेषतः।
कर्णाख्यं प्रदातव्यं कार्पासमथवा नवम् ॥ १५
दशां विवर्ज्जयेत् प्राज्ञो यद्यप्याहतवस्त्रजाः।
घृतेन दीपो दातव्यस्तिलतैलेन वा पुनः ॥ १६
धूपार्थं गुग्गुलुं दद्यात् घृतयुक्तं मधूत्कटम्।
चन्दनञ्च तथा दद्यादिदं यत् कुङ्कुमं शुभम् ॥ १७
कृतार्कं शरशिम्बञ्च पलञ्च रूपकं तथा।
कूष्माण्डालाबुवार्त्ताकुकोविदारांश्च वर्ज्जयेत् ॥ १८
पिप्पलीं मरिचञ्चैव तथा वै पिण्डमूलकम्।
कृतञ्च लवणञ्चैव वंशाग्रन्तु विवर्ज्जयेत् ॥ १९
राजमाषान् मसूरांश्च प्रवालकोरदूषकान्।
लोहितान् वृक्षनिर्य्यासान् श्राद्धकर्म्मणि वर्ज्जयेत् ॥ २०
आम्रातलवलीमूलमूलकान् खदिरदाडिमान्।
सकोविदार्य्यवत्कान्द्राजेन मधुना सदा ॥ २१
शक्तून् शर्करया सार्द्धं दद्या श्राद्धे प्रयत्नतः।
पायसादिभिरुग्रैश्च भोजयित्वा तथा द्विजान् ॥ २२
भक्त्या प्रणम्य चाचान्तान् तथा वै दत्तदक्षिणान्।
कृत्वा प्रसन्नात्मा अनुव्रज्य विसर्ज्जयेत् ॥ २३
निमन्त्रितस्तु यः श्राद्धे मैथुनं सेवते द्विजः।
श्राद्धं भुक्त्वा च दत्त्वा च युक्तः स्यात्मैथुनेन वा ॥ २४
कालशाकं महाशल्कं मांसं वा शकुनस्य च।
खड्गमांसं तथानन्त्यं यमः प्रोवाच धर्म्मवित् ॥ २५

इति शङ्खीये धर्म्मशास्त्रे त्रयोदशोऽध्यायः ॥ १३ ॥

---

## चतुर्द्दशोऽध्यायः।

यद्ददाति गयाक्षेत्रे प्रभासे पुष्करेऽपि च।
प्रयागे नैमिषारण्ये सर्व्वमानन्त्यमुच्यते ॥ १
गङ्गायमुनयोस्तीरे तीर्थे चामरकण्टके।
नर्म्मदायां गयातीरे सर्व्वमानन्त्यमुच्यते ॥ २
वाराणस्यां कुरुक्षेत्रे भृगुतुङ्गे महालये।
सप्तारण्येऽसिकूपे च यत्तदक्षयमुच्यते ॥ ३
नं चक्रदेशे तथा रात्रौ सन्ध्ययोश्च विशेषतः।
न श्राद्धमाचरेत् प्राज्ञो न ह्यदेशे न च व्रजेत् ॥ ४
हस्तिच्छायाक्ष्येमितपञ्चाहे राहुदर्शने।

विषुवत्ययने चैव सर्व्वमानन्त्यमुच्यते ॥ ५
प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम्।
प्राप्य श्राद्धन्तु कर्त्तव्यं मधुना पायसेन च ॥ ६
प्रजां पुष्टिं तथा स्वर्गमारोग्यञ्च धनं तथा।
नृणां प्राप्य सदा प्रीतिं प्रयच्छन्ति पितामहाः ॥ ७

इति शङ्खीये धर्म्मशास्त्रे चतुर्द्दशोऽध्यायः ॥ १४ ॥

---

## पञ्चदशोऽध्यायः।

जनने मरणे चैव सपिण्डानां द्विजोत्तमाः।
त्र्यहाच्छुद्धिमवाप्नोति योऽग्निवेदसमन्वितः ॥ १
सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते।
जनने मरणे विप्रो दशाहेन विशुध्यति ॥ २
क्षत्रियो द्वादशाहेन वैश्यः पक्षेण शुध्यति।
मासेन तु तथा शूद्रः शुद्धिमाप्नोति नान्यथा ॥ ३
रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशुध्यति।
अजातदन्तबाले तु सद्यःशौचं विधीयते ॥ ४
अहोरात्रात्तथा शुद्धिर्बाले त्वकृतचूडके।
तथैवानुपनीते तु त्र्यहाच्छुध्यन्ति मानवाः ॥ ५
मृतानां बान्धवानान्तु तथैव शूद्रजन्मनः।
अनूढभार्य्यः शूद्रस्तु षोडशाद्वत्सरात् परम् ॥ ६
मृत्युं समवगच्छेत्तु मासं तस्यापि बान्धवाः।
शुद्धिं समवगच्छन्ति नात्र कार्य्या विचारणा ॥ ७
पितृवेश्मनि कन्या या रजः पश्यत्यसंस्कृता।
तस्यां मृतायां नाशौचं कदाचिदपि शाम्यति ॥ ८
हीनवर्णाद्यदा नारी प्रमादात् प्रसवं व्रजेत्।
प्रसवे मरणे तज्जमशौचं नोपशाम्यति ॥ ९
समानं खल्वशौचन्तु प्रथमे तु समापयेत्।
असमानं द्वितीयेन धर्म्मराजवचो यथा ॥ १०
देशान्तरगतः श्रुत्वा सूतकानां मरणोद्भवौ।
यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत् ॥ ११
अतीते दशरात्रे तु तावदेव शुचिर्भवेत्।
तथा संवत्सरेऽतीते स्नात एव विशुध्यति ॥ १२
अनौरसेषु पुत्रेषु भार्य्यास्वन्यगतासु च।
परपूर्व्वासु च स्त्रीषु त्र्यहाच्छुद्धिरिहेष्यते ॥ १३
मातामहे व्यतीते तु आचार्य्ये च तथा मृते।
गृहे मृतासु दत्तासु कन्यासु च त्र्यहं तथा ॥ १४
निवासे राजनि तथा जाते दौहित्रके गृहे।
आचार्य्यपत्नीपुत्रे तु दिवसेन च मातुले ॥ १५
मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च।
सब्रह्मचारिणि तथा अनूचाने तथा मृते ॥ १६
एकरात्रं त्रिरात्रं वा षड्रात्रं मासमेव च।
शूद्राः सपिण्डवर्णानामशौचं क्रमतः स्मृतम् ॥ १७
सपिण्डे क्षत्रिये शुद्धिः षड्रात्रं ब्राह्मणस्य च।
वर्णानां परिशिष्टानां द्वादशोऽह्नि विनिर्द्दिशेत् ॥ १८
सपिण्डे ब्राह्मणा वर्णाः सर्व्व एवाविशेषतः।
दशरात्रेण शुध्येयुरित्याह भगवान् यमः ॥ १९
भृग्वग्निपतनाम्भोभिर्मृतानामात्मघातिनाम्।
पतितानामशौचञ्च शस्त्रविद्युद्धताश्च ये ॥ २०
यती व्रती ब्रह्मचारी सूपकाराश्च दीक्षिताः।
नाशौचभाजः कथिता राजाज्ञाकारिणश्च ये ॥ २१
यस्तु भुङ्क्ते पराशौचं वर्णी सोऽप्यशुचिर्भवेत्।
अशुद्धशुद्धौ शुद्धिश्च तस्याप्युक्ता मनीषिभिः ॥ २२
पराशौचे नरो भुक्त्वा कृमियोनौ प्रजायते।
भुक्तान्नं म्रियते यस्य तस्य जातौ प्रजायते ॥ २३
दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म्म च।
प्रेतपिण्डक्रियावर्ज्जमशौचे विनिवर्त्तते ॥ २४

इति शङ्खीये धर्म्मशास्त्रे पञ्चदशोऽध्यायः ॥ १५ ॥

---

## षोड़शोऽध्यायः।

मृन्मयं भाजनं सर्व्वं पुनःपाकेन शुध्यति।
मद्यमूत्रैः पुरीषैर्व्वा ष्ठीवनैः पूयशोणितैः ॥ १
संस्पृष्टं नैव शुध्येत पुनः पाकेन मृन्मयम्।
एतैरेव यदि स्पृष्टं ताम्रसौवर्णराजतम् ॥ २
शुध्यत्यावर्त्तितं पश्चादन्यथा केवलाम्भसा।
अम्लोदकेन ताम्रस्य सीसस्य त्रपुणस्तथा ॥ ३
क्षारेण शुद्धिः कांसस्य लौहस्यापि विनिर्द्दिशेत्।
मुक्तामणिप्रवालानां शुद्धिं प्रक्षालनेन तु ॥ ४
अब्जानाञ्चैव भाण्डानां सर्व्वस्याश्ममयस्य च।

गोऽजाश्वस्यापहरणे धेनूनां रजतस्य च।
जलापहरणे चैव कुर्य्यात् संवत्सरं व्रतम् ॥ १५
तिलानां धान्यवस्त्राणां शस्त्राणामामिषस्य च।
संवत्सरार्द्धं कुर्व्वीत व्रतमेतत् समाहितः ॥ १६
तृणकाष्ठे च तक्राणां रसानामपहारकः।
मासमेकं व्रतं कुर्य्याद्दन्तानां सर्पिषां तथा ॥ १७
लवणानां गुड़ानाञ्च मूलानां कुसुमस्य च।
मासार्द्धन्तु व्रतं कुर्य्यादेतदेव समाहितः ॥ १८
लौहानां वैदलानाञ्च सूत्राणां चर्म्मणां तथा।
एकरात्रं व्रतं कुर्य्यात्तदेव समाहितः ॥ १९
भुक्त्वा पलाण्डुं लशुनं मद्यञ्च कवकानि च।
नारं मलं तथा मांसं विड्वराहं खरं तथा ॥ २०
गौधेरकुञ्जरोष्ट्रञ्च सर्व्वं पञ्चनखं तथा।
क्रव्यादं कुक्कुटं ग्राम्यं कुर्य्यात् संवत्सरं व्रतम् ॥ २१
भक्ष्याः पञ्चनखास्त्वेते गोधाकच्छपशल्लकाः।
खड्गश्च शशकश्चैव तान् हत्वा तु चरेद्व्रतम् ॥ २२
हंसं मद्गुरकं काकं काकोलं खञ्जरीटकम्।
मत्स्यादांश्च तथा मत्स्यान् बलाकाशुकसारिकाः ॥ २३
चक्रवाकं प्लवं कोकं मण्डूकं भुजगं तथा।
मासमेतद्व्रतं कुर्य्यान्नात्र कार्य्या विचारणा ॥ २४
राजीवान् सिंहतुण्डांश्च शकुलांश्च तथैव च।
पाठीनरोहितौ भक्ष्यौ मत्स्येषु परिकीर्त्तितौ ॥ २५
जलेचरांश्च जलजान् मुखपादान् सुविष्किरान्।
रक्तपादान् जालपादान् सप्ताहं व्रतमाचरेत् ॥ २६
तित्तिरिञ्च मयूरञ्च लावकञ्च कपिञ्जलम्।
वार्द्ध्रीणसं वर्त्तकञ्च भक्ष्यानाह यमः सदा ॥ २७
भुक्त्वा चैवोभयदतं तथैकशफदंष्ट्रिणः।
तथा भुक्त्वा तु मासं वै मासार्द्धं व्रतमाचरेत् ॥ २८
वृथा कृसरसंयावं पायसापूपशष्कुलीः।
गोश्च क्षीरं विवत्सायाः महिष्याश्च तथा पयः ॥ २९
सन्धिन्यमेध्यं भक्षित्वा पक्षन्तु व्रतमाचरेत्।
क्षीराणि यान्यभक्ष्याणि तद्विकाराशने बुधः ॥ ३०
सप्तरात्रं व्रतं कुर्य्याद् यदेतत् परिकीर्त्तितम्।
लोहितान् वृक्षनिर्य्यासान् व्रश्चनप्रभवांस्तथा ॥ ३१
केवलानि तथान्नानि तथा पर्य्युषितञ्च यत्।
गुड़पक्वं तथा भुक्त्वा त्रिरात्रन्तु व्रती भवेत् ॥ ३२
दधिभक्ताश्च शुक्तेषु यच्चान्यद्दधिसम्भवम्।
गुड़युक्तं भक्षयित्वा तक्रं निन्द्यमिति श्रुतिः ॥ ३३
यवगोधूमजं सर्व्वं विकाराः पयसश्च ये।
राजवाड्वश्च कुल्माषं भक्ष्यं पर्य्युषितं भवेत् ॥ ३४
मयूरकुक्कुटमांसञ्च सर्व्वं यत्नेन वर्ज्जयेत्।
संवत्सरं व्रतं कुर्य्यात् प्राश्यैतान् ज्ञानतस्तथा ॥ ३५
शूद्रान्नं ब्राह्मणो भुक्त्वा तथा रङ्गावतारिणः।
वधकस्य चैव चौरस्यावीरायाश्च तथा स्त्रियः ॥ ३६
कर्म्मकारस्य वेणस्य क्लीबस्य पतितस्य च।
रुक्मकारस्य तक्ष्णश्च तथा वार्द्धुषिकस्य च ॥ ३७
कदर्य्यस्य नृशंसस्य वेश्यायाः कितवस्य च।
गणान्नं भूमिपालान्नमन्नञ्चैवाश्वजीविनः ॥ ३८
शौनपान्नं सूतिकान्नं भुक्त्वा मासं व्रतं चरेत्।
शूद्रस्य सततं भुक्त्वा षण्मासान् व्रतमाचरेत् ॥ ३९
वैश्यस्य च तथा भुक्त्वा मासमेकं व्रतं चरेत्।
क्षत्रियस्य तथा भुक्त्वा द्वौ मासौ च व्रतं चरेत् ॥ ४०
ब्राह्मणस्य तथा भुक्त्वा मासमेकं समाचरेत्।
अपः सुराभाजनस्थाः पीत्वा पक्षं व्रती भवेत् ॥ ४१
शूद्रोच्छिष्टाशने मासं पक्षमेकं तथा विशः।
क्षत्रियस्य तु सप्ताहं ब्राह्मणस्य तथा दिनम् ॥ ४२
अश्राद्धाशने विद्वान् मासमेकं व्रती भवेत्।
परिवित्तिः परिवेत्ता यया च परिविद्यते ॥ ४३
व्रतं संवत्सरं कुर्य्याद्दातृयाजकपञ्चमः।
शुनोच्छिष्टं तथा भुक्त्वा मासमेकं व्रती भवेत् ॥ ४४
दूषितं केशकीटैश्च मूषिकालाङ्गुलेन च।
मक्षिकामशकेनापि त्रिरात्रन्तु व्रती भवेत् ॥ ४५
वृथाकृसरसंयावपायसापूपशष्कुलीः।
भुक्त्वा त्रिरात्रं कुर्व्वीत व्रतमेतत् समाहितः ॥ ४६
नीलीं चैव क्षतो विप्रः शुना दष्टस्तथैव च।
त्रिरात्रन्तु व्रतं कुर्य्यात् पुंश्चलीदशनक्षतः ॥ ४७
पादप्रतापनं वह्नौ क्षिप्त्वा वह्नौ तथाप्यधः।
कुशैः प्रमृज्य पादौ च दिनमेकं व्रतं चरेत् ॥ -

चाक्रिकस्तु रथी हत्वा पृष्ठं प्राणपरायणम् ।
संवत्सरव्रतं कुर्य्याच्छित्त्वा पिप्पलपादपम् ॥ ४९
दिवा च मैथुनं कृत्वा स्नात्वा दुष्टजले तथा ।
नग्नां परस्त्रियं दृष्ट्वा दिनमेकं व्रती भवेत् ॥ ५०
क्षिप्त्वाग्नावशुचि द्रव्यं तद्वदम्भसि मानवः ।
मासमेकं व्रतं कुर्य्यादुपक्रुश्य तथा गुरुम् ॥ ५१
तथा विप्रयजं पीत्वा पानीयं ब्राह्मणस्तथा ।
त्रिरात्रन्तु व्रतं कुर्य्याद्वामहस्तेन वा पुनः ॥ ५२
एकपङ्क्त्युपविष्टेषु विषमं यः प्रयच्छति ।
स च तावदसौ पक्षं प्रकुर्य्याद् ब्राह्मणो व्रतम् ॥ ५३
धारयित्वा तुलाञ्चैव विषमं वणिजस्तथा ।
सुराकवद्यपानेषु भुक्त्वा क्षीरं व्रतं चरेत् ॥ ५४
विक्रीय पाणिना मद्यास्तिमाणि च तथाचरेत् ॥ ५५
हुङ्कारं ब्राह्मणस्योक्त्वा त्वङ्कारञ्च गरीयसः ।
दिनमेकं व्रतं कुर्य्यात् प्रयतः सुसमाहितः ॥ ५६
प्रेतस्य प्रेतकार्य्याणि कृत्वा वै धनहारकः ।
वर्णानां यद्व्रतं प्रोक्तं तद्व्रतं प्रयतश्चरेत् ॥ ५७
कृत्वा पापं न गूहेत गुह्यमानं हि वर्द्धते ।
कृत्वा पापं बुधः कुर्य्यात् पर्षदानुमतं व्रतम् ॥ ५८
स्थित्वा च श्वापदाकीर्णे बहुव्याघ्रमृगे वने ।
न ब्राह्मणो व्रतं कुर्य्यात् प्राणबाधभयात् सदा ॥ ५९
सतो हि जीवतो जीवं सर्व्वपापमपोहति ।
व्रतैः कृच्छ्रैस्तथा दानैरित्याह भगवान् यमः ॥ ६०
शरीरं धर्म्मसर्व्वस्वं रक्षणीयं प्रयत्नतः ।
शरीरात्स्रवते धर्म्मः पर्व्वतात् सलिलं यथा ॥ ६१
आलोच्य सर्व्वशास्त्राणि समेत्य ब्राह्मणैः सह ।
प्रायश्चित्तं द्विजो दद्यात् स्वेच्छया न कदाचन ॥ ६२

इति शाङ्खीये धर्म्मशास्त्रे सप्तदशोऽध्यायः ॥ १७ ॥

---

## अष्टादशोऽध्यायः ।

त्र्यहं त्रिषवणस्नाने प्रकुर्य्यादघमर्षणम् ।
निमज्ज्य नक्तं सरिति न भुञ्जीत दिनत्रयम् ॥ १
वीरासनं सदा तिष्ठेद्गाञ्च दद्यात् पयस्विनीम् ।
अघमर्षणमित्येतद् व्रतं सर्व्वाघनाशनम् ॥ २
त्र्यहं सायं त्र्यहं प्रातस्त्र्यहमद्यादयाचितम् ।
परं त्र्यहञ्च नाश्नीयात् प्राजापत्यं चरन् व्रतम् ॥ ३
त्र्यहमुष्णं पिबेदापस्त्र्यहमुष्णं घृतं पिबेत् ।
त्र्यहमुष्णं पयः पीत्वा वायुभक्षो दिनत्रयम् ॥ ४
तप्तकृच्छ्रं विजानीयाद्धैतदुक्तं सदा व्रतम् ।
द्वादशेनोपवासेन पराकः परकीर्त्तितः ॥ ५
विधिनोदकसिद्धानि समश्नीयात् प्रयत्नतः ।
शक्तून् हि मोदकान् मासं कृच्छ्रं वारुणमुच्यते ॥ ६
बिल्वैरामलकैर्वापि कपित्थैरथवा शुभैः ।
मासेन लोके तिकृच्छ्रः कथ्यते द्विजसत्तमः ॥ ७
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतम् ॥ ८
व्रतैस्तु त्र्यहमभ्यस्तैर्महासान्तपनं स्मृतम् ।
पादद्वयं तथा त्यक्त्वा शक्तूनां परिवासनात् ।
उपवासान्तराभ्यासात् तुलापुरुष उच्यते ॥ ९
गोपुरीषाशनो भूत्वा मासं नित्यं समाहितः ।
व्रतन्तु वार्द्धिकं कुर्य्यात् सर्व्वपापापनुत्तये ॥ १०
ग्रासं चन्द्रकलावृद्ध्या प्राश्नीयाद्वर्द्धयन् सदा ।
ह्रासयंस्तु कलाहानौ व्रतं चान्द्रायणं स्मृतम् ॥ ११
मन्त्रं विद्वान् जपेद्भक्त्या जुहुयाच्चैव शक्तितः ।
अयं विधिस्तु विज्ञेयः सुधीभिर्विमलात्मभिः ।
पापात्मनस्तु पापेभ्यो नात्र कार्य्या विचारणा ॥ १२
शङ्खप्रोक्तमिदं शास्त्रं योऽधीते प्रयतः सुधीः ।
सर्व्वपापविनिर्म्मुक्तः स्वर्गलोके महीयते ॥ १३

इति शाङ्खीये धर्म्मशास्त्रेऽष्टादशोऽध्यायः ॥ १८

शङ्खसंहिता समाप्ता ।

# शङ्खसंहिता।

## प्रथम अध्याय।

सृष्टि और संहारकारी स्वयम्भूको नमस्कारकर चतुर्व्वर्णके हितके लिये शङ्ख-ऋषिने ( धर्म ) शास्त्र प्रकाश किया। यजन, याजन, दान, अध्यापना, प्रतिग्रह और अध्ययन—विप्रगण प्रति दिन यह छः काम करें; सिवा इनके और कोई काम न करें। दान अध्ययन और यथाशास्त्रमत यजन—यह तीन काम क्षत्रिय और वैश्यजातिके उचित हुए हैं। क्षत्रिय जातिका विशेष कर्त्तव्य प्रजावर्गका प्रतिपालन और वैश्य जातिका विशेषरूप कर्त्तव्य कृषि, गोसमूहका प्रतिपालन और वाणिज्य यह तीन काम जानना चाहिये। शूद्र जातिका कर्त्तव्यकर्म ब्राह्मणोंकी सेवा और सब प्रकारकी शिल्पकार्य्य उपकार्य्य प्रधान समझना चाहिये। क्षमा, सत्यवाक्य, इन्द्रिय-दमन और शौच—इन चारो कामोंमें ब्राह्मण, क्षत्रिय, वैश्य, शूद्रादि सभीको समान अधिकार है। इन चारो कामोंमें कोई भी इतर विशेष नहीं। ब्राह्मण, क्षत्रिय, वैश्य—यह तीनो वर्ण द्विजशब्द प्रतिपाद्य हैं यानी इन तीनो वर्णोंका सिर्फ उपनयन संस्कार होता है। इन तीनो वर्णोंका मूंजबन्धन यानी उपनयन-संस्कार दूसरा जन्म समझना चाहिये। ब्राह्मण, क्षत्रिय, वैश्य—इन तीनो वर्णोंके उपनयन-संस्कारके काममें उपनयन-संस्कार वा गायत्रीका उपदेश करनेवाले आचार्य्यको पिता और सावित्रीको प्रधान जननी समझना चाहिये। जबतक वेदशास्त्रमें अधिकार नहीं होता यानी वेदपाठ आरम्भ नहीं होता, तबतक ब्राह्मणोंको शूद्रके बराबर समझना चाहिये। वेदपाठ आरम्भ होनेपर द्विज समझना चाहिये। १—८।

प्रथम अध्याय समाप्त ॥ १ ॥

---

## द्वितीय अध्याय।

गर्भके सम्पूर्णरूपसे प्रकाश पानेपर, निषेक-संस्कार करना कर्त्तव्य कथित हुआ है। गर्भस्थ सन्तान-स्पन्दन आरम्भ होनेपर पुंसवन संस्कार करें। सन्तान-जन्मका अशौच व्यतीत होनेपर नामकरण-संस्कार करें। चतुर्व्वर्णका युग्माक्षर संयुक्त नाम रखना चाहिये। ब्राह्मण जातिका माङ्गल्य-संयुक्त नाम, क्षत्रिय जातिका बल-संयुक्त नाम, वैश्य जातिका धन-संयुक्त नाम और शूद्र जातिका जुगुप्सित शब्दयुक्त नाम

रखना चाहिये। ब्राह्मणका अमुक शर्म्मा, क्षत्रियका अमुक वर्म्मा, वैश्य जातिका अमुक धन और शूद्र जातिका अमुक दास—इसतरह नाम रखना चाहिये। चौथे मासमें घरके बाहर लाके निष्क्रामण-संस्कार; छठे मासमें अन्नप्राशन-संस्कार तथा जिस वंशका जिस वर्षमें चूड़ा-संस्कार होता हो, उसे उसी वर्ष करना चाहिये। गर्भसे आठवें वर्षको ब्राह्मणकुमारका उपनयन-संस्कार, गर्भसे ग्यारहवें वर्षतक क्षत्रियकुमारका उपनयन-संस्कार और गर्भसे बारहवें वर्षतक वैश्यका उपनयन-संस्कार करना चाहिये। ब्राह्मणका गर्भसे १६ वें वर्षतक गौणकाल, क्षत्रियका गर्भसे २२ वें वर्षतक गौणकाल और वैश्यका गर्भसे २४ वें वर्षतक गौणकाल समझना चाहिये। यह गौणकाल उक्त हुए, उसके बाद गायत्रीका उपदेश करना नहीं चाहिये। उस कालमें उपनयन-संस्कार न होनेसे ब्राह्मण, क्षत्रिय और वैश्य सन्तानगणको सावित्रीपतित और व्रात्य; यानी संस्कारहीन समझ सब कर्मोंमें विवर्जित समझना चाहिये। ब्राह्मणका साढ़े पन्द्रह वर्ष, क्षत्रियका साढ़े इक्कीस वर्ष और वैश्यका साढ़े तेईस वर्षतक उपनयन-संस्कार गौणके मासमें उक्त हुआ है। जिस वर्णके जो जो वर्ष उक्त हुए, उतनेमें उपनयन करनेसे गायत्रीके उपदेशका समय अतीत नहीं होता, किन्तु वह काल अतीत होने होसे गायत्रीका उपदेश न करना चाहिये, गायत्रीको निवृत्त रखें। यथोक्तकालमें संस्कार न होनेसे, पूर्व्वोक्त तीनों वर्ण सावित्रीपतित, व्रात्य नामधारी होंगे। ब्राह्मणादिके कर्त्तव्य गायत्री जपादि-कामोंमें अधिकार नहीं रहेगा। ब्राह्मण, क्षत्रिय और वैश्य इन तीनों वर्णोंके उपनयन-संस्कारके समय मूंज बांधना पड़ता है। क्रमशः वह किस तरह होगा, कि किस द्रव्यसे किस वर्णका मूंज बनाना पड़ेगा। ब्राह्मण ब्रह्मचारी कृष्ण चर्म्म, क्षत्रिय ब्रह्मचारीका व्याघ्रचर्म्म और वैश्य ब्रह्मचारीका छागचर्म्म उत्तरीय वस्त्र है; ब्राह्मणका बिल्व और पलाश-निर्म्मित दण्ड, क्षत्रियका पिप्पल-निर्म्मित दण्ड और वैश्यका बिल्वनिर्म्मित दण्ड होना चाहिये। ब्राह्मणके केशतक दीर्घ, क्षत्रिय जातिके ललाट परिमित दीर्घ और वैश्य जातिके नासातक दीर्घ दण्ड होना चाहिये; दण्ड सरल यानी सीधा लकयुक्त और अग्निदग्ध न हो। ब्राह्मणका यज्ञोपवीत कईके सूतका, क्षत्रियका यज्ञोपवीत क्षौमसूत्र-निर्म्मित और वैश्यका ऊर्णासूत्र-निर्म्मित होना चाहिये। ब्राह्मण पहले भवत् शब्द प्रयोगपूर्व्वक, यथा—भवन्! "भिक्षां देहि" स्त्रियोंसे "भवति! भिक्षां देहि" प्रयोगपूर्व्वक भिक्षा करें। क्षत्रिय जाति "भिक्षां भवन्! देहि" इसतरह बीचमें भवत् शब्द

प्रयोग करे और वैश्य जाति "भिक्षां देहि भवन्।" इसप्रकार अन्तमें भवन् शब्दका प्रयोग करे। १—१२।

द्वितीय अध्याय समाप्त ॥ २ ॥

---

## तृतीय अध्याय।

आचार्य्य माणवकको उपनयन देनेके बाद वेदपाठसे शिक्षित करें। जो एक वेतन लेकर वेदाध्ययन कराते हैं, उन्हें उपाध्याय कहे जाते हैं। ब्रह्मचारी माणवक प्रत्यूषमें उठकर शौचादि कर्म्म समाप्त कर पवित्र हो स्नान करनेके बाद पूर्व्व-स्थापित अग्निमें होम करें। उसके बाद होमादि करनेकी वस्त्र त्यागकर धोती आदि पहिनकर पवित्र हो गुरुके पादपद्मोंमें अभिवादन करें। बाद गुरुदेवकी आज्ञा ले विनीत भावसे गुरुदेवका मुख-पद्म देख ब्रह्माञ्जलि बाँध अध्ययन करें, (वेदपाठके समय प्रणव उच्चारणपूर्व्वक जो अञ्जलि बाँधना पड़ती है, उसे ऋषिगणोंने ब्रह्माञ्जलि कहा है।) वेदपाठ आरम्भ और समाप्त करनेके समय प्रणव उच्चारण करना पड़ेगा। अनध्यायके दिन यत्नपूर्व्वक अध्ययन त्याग करना चाहिये। चतुर्द्दशी, अमावास्या, पूर्णिमा अष्टमी आदि तिथियां, सूर्य्य और चन्द्र-ग्रहण, उल्कापात, भूमिकम्प आपद्ग्रस्त जन-मरणका अशौच, ग्रामविप्लव, अग्निदाह प्रभृति, ग्रामकी अनिष्टजनक दुर्घटनाओंकी उपस्थिति, इन्द्रधनुष, सुरत, मेघगर्ज्जन, वाद्यकोलाहल और वादीका परस्पर विग्रह आदि अनध्याय माने अध्ययनके प्रतिबन्धक हैं; यह सब घटनायें होनेसे और पूर्व्व-कथित चारों तिथियोंमें अध्ययन करना मना है। किसी व्यक्तिके अभियोग यानी तिर-स्कार करनेपर भी अति वेगपूर्व्वक अध्ययन करना नहीं चाहिये। देवमन्दिर, वल्मीक, श्मशान, शिवमन्दिर और ब्राह्मणोंसे यथाविधि भिक्षा करें; (भिक्षाकर लौटनेके बाद हाथ पैर धोकर) पवित्र हो पूर्व्वाभिमुख बैठ गुरुदेवकी आज्ञा ले भोजन करें। अहङ्कार-शून्य हो गुरु-देवके हितजनक और प्रिय कार्य्य करें। सायं-सन्ध्या समाप्त करनेके बाद सायंकालीन होमकर गुरुदेवका अभिवादनकर गुरुवाक्य प्रतिपालन करनी पादसेवादि करें। मधु मांस अञ्जन (आंखोंमें काजल), माल्य गीत, नृत्य हिंसा, प्राणिहत्या, लोकनिन्दा और स्त्रीसंसर्ग यत्नपूर्व्वक त्याग करें मेखला उपवीत (प्रभृति रचित मूंज) कृष्णसारचर्म्म और बिल्वादि दण्ड यत्नपूर्व्वक धारण करें; ब्रह्मचारी सावधान होकर सदा भूमिशयन करें। वेदविद्या लाभके योग्य व्यक्ति यह सब नियमित कार्य्य सम्पन्न करें। गुरुदेवको धनादि दक्षिणा देकर समावर्त्तन स्नान करें। १—१८।

तृतीय अध्याय समाप्त ॥ ३ ॥

---

## चतुर्थ अध्याय।

इसके बाद समानप्रवरा और भिन्न गोत्रजाता कन्या विधिपूर्वक लाभ करें, यानी विवाह करें। मातृपक्षकी पञ्चमी और पितृपक्षकी सप्तमीतक त्याग करना चाहिये। ब्राह्म, दैव, आर्ष, प्राजापत्य, आसुर, गान्धर्व, राक्षस और अधम पैशाच आदि आठ प्रकारके विवाह हैं। ब्राह्मणोंको प्रथम चार विवाह और क्षत्रियोंको गान्धर्व और राक्षस विवाह प्रशस्त है। अप्रार्थित होकर वस्त्रपूर्वक जो कन्यादान होता है, उसे ब्राह्मविवाह कहते हैं। यज्ञकार्य्यमें दक्षिणास्वरूप पुरोहितको कन्यादान मिलनेका नाम दैव-विवाह है। गोद्वय ग्रहणकर जो कन्यादान होता है उसे आर्ष विवाह कहते हैं। प्रार्थित होकर होनेवाले कन्यादानको प्राजापत्य विवाह कहते हैं। धन ग्रहणकर जो विवाह होता है, उसको आसुरी विवाह कहते हैं; वर-कन्या दोनोंकी प्रतिज्ञा द्वारा जो विवाह होता है, उसे गान्धर्व विवाह कहते हैं। युद्धक्षेत्रमें हरण कन्यासे विवाह करनेका नाम राक्षस विवाह है। किसी छलसे कन्यासे विवाह करनेका नाम पैशाच-विवाह है। सब विवाहोंमें पैशाच विवाह ही निकृष्ट है। ब्राह्मणको तीन जातिकी कन्या, क्षत्रियको दो जातिकी कन्या और वैश्यको एक जातिकी कन्या भार्य्या हो सकेगी। ब्राह्मणोंको ब्राह्मण-कन्या क्षत्रिय-कन्या और वैश्य-कन्या, क्षत्रियको क्षत्रिय और वैश्य-जातिकी कन्या और वैश्यको सिर्फ वैश्य कन्या ही भार्य्या हो सकेगी। शूद्रोंकी भार्य्या सिर्फ शूद्र-कन्या ही होगी। विपद्ग्रस्त होनेपर भी द्विजगण शूद्र कन्यासे विवाह न करें। उस शूद्रकन्यासे प्रसूत सन्तानकी निष्कृति नहीं। समानवर्ण, उच्चवर्ण, सब विवा-हके समय धार्म्मिकोंमें श्रेष्ठ होनेपर भी ब्राह्मणादि सवर्णा स्त्रीका पाणिग्रहण करें, क्षत्रियकन्या, विवाहके समय शरग्रहण करे; वैश्यकन्या, विवाहके समय प्रतोद यानी प्रतोद-गोताड़न दण्ड ग्रहण करे। अनिन्द्य आचरणवाली स्त्री, पतिप्राणा स्त्री और गर्भवती स्त्री ही भार्य्या है। इन गुणोंसे सम्पन्न भार्य्या प्रकृष्ट यत्नपूर्व्वक प्रतिपालनीया और सर्व्वदा ताड़नीया (यानी कोई असत् पथगामिनी न हो) है। जो भार्य्यायें रक्षिता और पालिता हैं; वही लक्ष्मीस्वरूपा हैं; इसके अन्यथा नहीं ॥१-१५।

चतुर्थ अध्याय समाप्त ॥ ४ ॥

---

## पञ्चम अध्याय।

गृहस्थको पांच सूना (जीवहिंसा-स्थान) चूल्हा, पेषणी, उपस्कर (सम्मार्ज्जनी और गृहोपकरण सूप) कण्डणी (उखल

आदि ), उदकुम्भ ( जलका घड़ा ), इन सब यज्ञोपकरणकी वस्तुओंमें गृहस्थोंकी जीव-हिंसा अनिवार्य है; उस जीवहिंसासे उत्पन्न पापशान्तिके लिये गृहस्थ किसी दिन भी पञ्चयज्ञ त्याग न करें। पञ्चयज्ञ करनेसे गृहस्थका पञ्चसूनाजन्य पाप विनष्ट होता है। देवयज्ञ, भूतयज्ञ, पितृयज्ञ, ब्रह्मयज्ञ और मनुष्ययज्ञ इन पाँच यज्ञोंको पञ्चयज्ञ कहते हैं। नित्य होम, देवयज्ञ, बलि देना भूतयज्ञ, श्राद्ध तर्पण, पितृयज्ञ, वेदपाठ, ब्रह्मयज्ञ और अतिथिसेवा मनुष्ययज्ञ है। वानप्रस्थ, ब्रह्मचारी, यति और भिक्षुगण गृहस्थोंके अन्नोंसे यथोचितरूपसे जीविकानिर्वाह कर रहे हैं। गृहस्थ ही आगयज्ञ करते हैं, गृहस्थ ही तपस्या करते हैं, गृहस्थ ही दाता होते हैं, इसीलिये गृह-आश्रम सब आश्रमोंमें श्रेष्ठ आश्रम है। जैसे स्वामी ही स्त्रीके प्रभु हैं, वैसे ब्राह्मण चतुर्वर्णोंके प्रभु हैं, वैसे ही अतिथिगण गृहस्थोंके प्रभु हैं। जैसे स्वामिसेवा द्वारा स्त्रियां स्वर्ग प्राप्त होती हैं, वैसे व्रतउपवास या उपवास द्वारा और अन्यान्य धर्म-कर्म द्वारा स्वर्गप्राप्त नहीं होतीं। ब्रह्मचारीगण, बार बार स्नान, नित्य होम या अग्निके तृप्तिजनक कार्य्य द्वारा स्वर्ग प्राप्त नहीं होते, सिर्फ गुरुकी सेवा द्वारा ही प्राप्त होते हैं। वानप्रस्थगण, भोजनत्याग करनेसे जैसे स्वर्गप्राप्त होते हैं, वैसे अग्निकी शुश्रूषा, क्षमा या नाना तीर्थस्नान-भ्रमण द्वारा स्वर्गप्राप्त नहीं होते। योगीगण मैथुन त्यागकर जैसी सिद्धि पाते हैं, वैसी सिद्धि भिक्षा या मौनव्रत अथवा निर्जन स्थानमें बैठकर योग अवलम्बन द्वारा नहीं पा सकते। जैसे अतिथि-सेवा द्वारा स्वर्गप्राप्त होता है, वैसे यज्ञकर्म्म द्वारा या बहुत दक्षिणा देनेसे या वह्नि-शुश्रूषा द्वारा गृहस्थगण स्वर्गप्राप्त नहीं होते। अतएव स्त्रियोंको स्वामिसेवा, ब्रह्मचारियोंको गुरुशुश्रूषा; वानप्रस्थगणका भोजनत्याग; योगियोंका स्त्रीपरित्याग और गृहस्थगणको अतिथिसेवा ही प्रधान धर्म्म समझना चाहिये। अतिथिसेवा, गृहस्थोंका प्रधान धर्म्म होनेकी वजहसे खूब यत्नसे गृहस्थगण घरमें आये अतिथिको आदर, शय्या और धन द्वारा उनका सत्कार करें। आस्तिक ब्राह्मण शास्त्रनियमके अनुसार प्रातः और सायंकालमें अग्निहोत्र होम करें और यथानियमसे दर्श-पौर्णमास याग करें। यज्ञ, पशु बन्धन और चातुर्मास्यव्रत द्वारा और त्रैवार्षिक या वार्षिक अन्न रखनेसे आलस्यशून्य होकर सोमरस पान करें। गरीब द्विज वैश्वानरी याग ही इष्टि करें; गरीब होनेपर भी शूद्रसे धनकी प्रार्थना न करें और अभीप्सित चीजें दान करें। विद्वान व्यक्ति अपनी वृत्ति और पैतृक पुरोहित भी छोड़ें, कार्य्य और अन्न द्वारा विशुद्ध और जिनसे शरीरका मांस ढीला

कौपीन मात्र पहनें; जनप्राणिशून्य स्थानमें वास करें और जहां सन्ध्या हो, वहीं रात बितायें। चारो ओर अच्छी तरह देखकर पाद निक्षेप करें, वस्त्र द्वारा पवित्रकर जलपान करें, सत्य द्वारा पवित्र वाक्य प्रयोग करें यानी झूठका सिलसिला न रखें और जो अपने चित्तको पवित्र जान पड़े, वैसा ही आचरण-अनुष्ठान करें। चन्दन प्रभृति गन्ध द्वारा किंवा अर्चित ... यदि कोई अङ्गलेपन करे तो सुख या दुःख न मानें, मङ्गल कार्यमें ... वा अमङ्गल कार्यमें ... हो, उसकी ... भी ... न करें। ... लोहा पत्थर स्वर्ण आदिको समान समझें। ध्यान और योगपरायण भिक्षुक मुक्ति लाभ करेंगे। योगियोंने चित्तके संयमको धारणा कहा है, इन्द्रियोंका संहार यानी विषय निवृत्तिको प्रत्याहारके नाममें अभिहित किया है। योगियोंने योगाभ्यास द्वारा हृदयस्थ परमात्माके दर्शनको ध्यानके नामसे अभिहित किया है। अङ्गऋषिने स्वयं कहा है, कि यही ध्यान सब योगोंमें मङ्गलदायक है। हृदयमें सब देवताओंका अधिष्ठान है, हृदयमें प्राणवायु अवस्थिति करती है, हृदयमें सूर्यचन्द्रादि ज्योतिःपदार्थसमूह हैं; हृदयमें सभी चीजें हैं। ।१-१६। अपनी देहको अरणि और ओङ्कारको उत्तरारणि यानी प्रणव जप करनेसे हृदयस्थ ज्योतिःस्वरूप परमात्मा प्रकाश पाया करते हैं। ध्यान यानी हृदयमें देवदेव परमात्माके योग द्वारा दर्शन और निर्मन्थन यानी ओङ्कार जप—इन दोनों कामों द्वारा हृदयस्थित विष्णु दिखाई देते हैं। चारो ओर जो सूर्य प्रभृति हृदय और अध्यक्तायनमें अवस्थिति कर रहे हैं; उस तेजमें महदादि तत्त्वपदार्थ अवस्थिति कर रहे हैं; उस तत्त्वमें विष्णु अवस्थिति कर रहे हैं। जितनी सूक्ष्म चीजें हैं, उन सबसे अत्यन्त सूक्ष्म ... आत्मास्वरूप और जितने स्थूल पदार्थ हैं, उन सबसे भी स्थूल यानी ... वीतशोक यानी योगिगण ... देखते हैं। वासुदेव मूर्त्ति ... इन्द्रियगोचर नहीं ...; कारण, उनकी इन्द्रियां ... आवृत और विषय सक्त रहती हैं। वही व्यक्ताव्यक्त पुरुष विष्णु, धाता और विधाता हैं। वही पुरातन सम्पूर्ण मङ्गलरूपा हैं। वह अणुसे भी सूक्ष्म हैं। महत्तत्त्वके बाद अव्यक्त, अव्यक्तके बाद तमःके पार अवस्थित आदित्यवर्ण महापुरुषको अन्तःकरणसे जान सकनेसे मृत्युसे भय नहीं; एवं सद्गतिका अन्य उपाय नहीं। पृथ्वी, जल, तेज, वायु और आकाश, इन पांचो वस्तुओंके पण्डितोंको महाभूत समझें। चक्षु, कर्ण, त्वक, रसना और नासिका—शरीरमें यह पांच ज्ञानेन्द्रिय हैं; शब्द, रूप, स्पर्श, रस और गन्ध—यह पांच गुणके विषय हैं। हाथ,

पैर, उपस्थ, जीभ और पायु—शरीरमें यह पाँच कर्मेन्द्रिय हैं ; मन बुद्धि, अहङ्कार और प्रकृति—यह चार पूर्व्वोक्त इन्द्रियोंकी अपेक्षा परवर्त्ती और श्रेष्ठ हैं ; आत्मा इन सब पदार्थोंसे अतिरिक्त है, वही आत्मा पवित्र और प्रवीण हैं। साधु व्यक्तिगण इनसे अवगत हो विमुक्त होते हैं। आत्मा परमशुद्ध, अविनाशी और उत्तम है। आत्म को शब्द, रस, स्पर्श, रूप या गन्ध नहीं, दुःख नहीं और सुख भी नहीं। वही विष्णुका परमपद है। जिस व्यक्तिका सारथी—विज्ञान, लगाम—मन है ; वही पथके पार विष्णुके परमपदमें जा सकता है। केशाग्रके शत भागके एक भागको शतस भागका एक भाग करनेपर उसके भी शत भागके एक भाग जैसे पुरुष हैं, पुरुषके बाद कुछ भी नहीं। पुरुष ही परमगति हैं ; पुरुष हो पराकाष्ठा। यह पुरुष सर्व्वभूतमें व्यापकरूपसे अवस्थान कर रहे हैं। सूक्ष्म-दर्शीगण सूक्ष्म और प्रधान बुद्धिबलसे इन्हें अवलम्बन किया करते हैं। १०-१२।

सप्तम अध्याय समाप्त ॥ ७ ॥

---

## अष्टम अध्याय।

अब यथाशास्त्र क्रियास्नान कहता हूं। पहले मट्टी और जल द्वारा यथाविधि शौच करें। जलमें निमज्ज और उन्मज्ज हो यथाविधि आचमनकर तीर्थका आवाहन करें। वही सविस्तार कहता हूं,—जलपति वरुणदेवके शरणागत हो सर्व्वपापक्षयके लिये तीर्थदान करनेको प्रार्थना करना चाहिये। मैं सर्व्वपापविनाशी तीर्थका आवाहन करता हूं ; शुभाप्त अनुग्रहकर वह तीर्थ इस जलमें सन्निहित हों। रुद्र और जलशायी सब सहस्रपाको ज्ञानरूप पवित्र भावसे कहना चाहिये,— 'सब जलवासियोंके शरणागत होता हूं'। सर्व्वपापविनाशी अंशुमाली देव हुताशनके शरणागत हो कहना चाहिये, कि जल पवित्रसे भी पवित्रतर है ;—मैं उनके शरणागत होता हूं। रुद्र, अग्नि, सर्प, वरुण और जल मेरी पापराशि विनाश करें और सर्व्वतोभावसे मेरी रक्षा करें। 'हिरण्यवर्णा' इत्यादि तीन मन्त्र ; 'अगो' आदि चार मन्त्र, 'सन्नोदेवी' आदि मन्त्र ; 'यज्ञ आप' यह मन्त्र और 'इदमापः प्रवहत' आदि मन्त्र उच्चारण करें। इनमें छन्द ऋषि, देवता आदि भी कीर्त्तन करें ; इस प्रकार दमार्ज्जनकर पवित्रभावसे प्रत्यक्ष अघमर्षण सूक्त पाठ करें। उसके छन्द, अनुष्टुप ऋषि अघमर्षण देवता, भावहुत्त और पापक्षय इसका उद्देश्य है। महाव्याहृति मन्त्र पाठकर मस्तकमें जल दें। जैसे यज्ञश्रेष्ठ अश्वमेध सर्व्वपापविनाशक है, वैसे ही अघमर्षणसूक्त सब पाप विनाश करता है। इस विधिके अनुसार स्नानकर, वह वस्त्र परित्यागकर, धौत वस्त्र पहने। इसके

